

TO

HIS HOLINESS SRI JAGADGURU

**SRI SACHCHIDANANDA SIVABHINAVA**

**NRISIMHA BHARATI SWAMI**

WHO ADORNS THE THRONE OF THE SRINGERI MUTT
AS THE WORTHY REPRESENTATIVE OF THE
GREAT SANKARACHARYA

AND

THAN WHOM IT IS IMPOSSIBLE
TO COME ACROSS A HOLIER PERSONAGE,
A TRUER MAHATMA, A NOBLER SAINT
AND A MORE RIGOROUS ASCETIC,
THIS EDITION IS MOST RESPECTFULLY INSCRIBED
AS A TOKEN OF UNBOUNDED ADMIRATION
BY THE HUMBLEST OF ALL HIS DISCIPLES

T. K. BALASUBRAHMANYAM.



नानाजन्मसु संचितेन तपसा पूतेन चित्तात्मना
मित्रेण प्रतिबोधितेन कुतुकात्सर्वाः कृतीः शांकरीः ।
संमुद्र्य प्रथमं जगद्गुरुपदे भक्त्या मयाद्यार्पिताः
स्वीकृत्योपहृतिं करोतु गुरुराड् धन्यं तथेमं जनम् ॥

श्रीमच्छंकरदेशिकेन्द्ररचितान्सर्वान्प्रबन्धान्मुदा
तत्प्रीत्यै परिशोध्य पुस्तकचयैः संमुद्र्य साकं बुधैः ।
तच्छृङ्गाग्रप्रवरालिमध्यविलसच्छ्रीदेशिकेन्द्रेषु ता-
न्कृत्वाद्योपहृतिं सभक्तिविनयं नूनं कृतार्थोऽस्म्यहम् ॥

सौम्याब्दमाघार्जुनपक्षराजत्सूर्याङ्कतिथ्याश्रितसोमवारे ।
श्रीशंकरार्यप्रतिमाप्रतिष्ठाकाले मयैषोपहृतिर्व्यधायि ॥

श्रीशंकरकृतिमाला गुरुवरतुष्ट्यै समर्पिता मोदात् ।
बालादिमपदभाजा सुब्रह्मण्येन भक्तिनम्रेण ॥ ४ ॥

## CONTENTS.


| | PAGE. |
|---|---|
| BRAHMASUTRA-BHASHYA. | |
| CHAPTER III. . . . | 559-760 |
| PADA 2. . . . . | 559 |
| PADA 3. . . . . | 615 |
| PADA 4. . . . . | 715 |
| CHAPTER IV. . . . | 761-862 |
| PADA 1. . . . . | 763 |
| PADA 2. . . . . | 797 |
| PADA 3. . . . . | 819 |
| PADA 4. . . . . | 845 |

## ॥ विषयाः ॥

पृष्ठम्

ब्रह्मसूत्रभाष्यम्

अध्यायः ३. ... ... ५५९—७६०

द्वितीयः पादः ... ... ५५९

तृतीयः पादः ... ... ६१५

चतुर्थः पादः ... ... ७१५

अध्यायः ४. ... ... ७६१—८६२

प्रथमः पादः ... ... ७६३

द्वितीयः पादः ... ... ७९७

तृतीयः पादः ... ... ८१५

चतुर्थः पादः ... ... ८४५

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

पृष्ठम्

**तृतीयोऽध्यायः**

द्वितीयः पादः— तत्त्वं-पदार्थविवेकः ५६१–६१४

१. संध्याधिकरणम् ... ५६१—५६९

संगतिप्रदर्शनपूर्वकम् उद्देश्यं त्वं-पदार्थं विवेचयितुम्, 'अथ रथान्—' इति श्रुतिमवष्टभ्य तथ्यरूपां स्वप्नसृष्टिमुदाहृत्य मिथ्याप्रत्ययाः सर्वेऽपि सम्यञ्च इति प्रतिजानानां पूर्ववादिनां पक्षस्य उद्भावनम् ... ५६१

'य एष सुप्तेषु—' इत्यादिकाठकश्रुतिमवलम्ब्य प्राज्ञकर्तृकत्वं हेतूकृत्य स्वप्नसृष्टेः पारमार्थिकत्वसाधनम् ... ५६२

व्यापकविरुद्धोपन्यासेन वस्तुत्वं व्यावर्त्य मायामात्रत्वसिद्धान्तः ... ५६३

शुभाशुभफलान्वयव्यतिरेकाभ्यां शास्त्रेण च विरोधस्य परिहारः .. ५६५

S. W. III. 0

स्वयंज्योतिष्ट्वविवेचनानुगुणं रथाद्यभाववचनमेव श्रुत्या व्याख्येयम्, रथादिसृष्टिवचनं तु भक्त्या —इति विविच्य परोक्तनिरसनम् ... ५६६

प्राज्ञकर्तृकत्वस्य पराभिमतहेतोः असिद्धिबाधाभ्यामाभासीकरणम् ... ५६६

परमात्मांशस्य जीवस्य सत्यसंकल्पस्य सांकल्पिकी स्वप्ने रथादिसृष्टिः— इति शङ्कायाः, जीवस्य ज्ञानैश्वर्यतिरोधानमुपपाद्य परिहारः ... ५६७

२. तदभावाधिकरणम् ... ५७०—५७६

सुषुप्तिपरीक्षार्थं विषयोपन्यासः ... ५७०

नाडीपुरीतत्परमात्मनां सुषुप्तस्थानतया श्रूयमाणानाम् एकार्थानां विकल्पे ब्रह्मभावानियमात् कर्मणैवापवर्गं संभावयतां पूर्ववादिनां मतस्य उद्भावनम् ... ५७०

समुच्चयेन नाड्यादीनि स्वापाय उपसर्पतीति सिद्धान्तः ... ५७१

एकविभक्तिनिर्देशस्य अनैकान्तिकत्वप्रदर्शनम्... ५७१

सापेक्षश्रुत्यनुरोधेन निरपेक्षश्रुतिं नीत्वा समुच्चयबाधनिरसनम् ... ५७२

जीवस्याधेयत्वमभ्युपगतं परित्यज्य—ब्रह्मात्मत्वमेव जीवस्य सुषुप्ते ब्रह्माधारत्वम्, तदुपाधिक-

रणमात्राधारतया तु जीवस्य सुषुप्तारम्भाय नाडीपुरीतदाधारत्वम्—इति अतुल्यार्थतानिरूपणेन विकल्पविघटनम् ... ५७४

असत्यपवादे जीवस्यौत्सर्गिकं ब्रह्मतादात्म्यं न सुषुप्ते अन्यथयितुं शक्यम्—इति विकल्पायोगे युक्त्यन्तरम् .... ५७४

परमात्मातिरिक्तेषु स्थानेषु विशेषविज्ञानस्यावश्यकतया सुप्तेरनुपपत्तिः ... ५७४

गुणप्रधानभावेन समुच्चयः, न समप्रधानतयेति निष्कर्षः ... ५७५

आत्मनः प्रबोधापादानतां स्वापाधिकारे शिष्यमाणामुपन्यस्य सिद्धान्तदृढीकरणम् ... ५७५

३. कर्मानुस्मृतिशब्दविध्यधिकरणम् ५७६—५७९

जलबिन्दुन्यायेन सुप्त एव प्रतिबुध्यत इति न नियन्तुं शक्यते— इति पूर्वपक्षः ... ५७६

कर्मशेषानुष्ठानदर्शनम् अनुस्मृतिं श्रुतिं कर्मविद्याविध्यनुपपत्तिं चोपन्यस्य सुप्तस्यैव पुनरुत्थानमिति नियमस्य समर्थनम् ... ५७६

उत्सूत्रं सिद्धान्तयुक्तिविशेषाणामुपन्यासः ... ५७७

विवेकहेतोः कर्मणोऽविद्यायाश्च सद्भावात् जीवस्य ब्रह्माभेदाच्च जलबिन्दुन्यायस्य विघटनम् ... ५७९

४. मुग्धाधिकरणम् ५७९—५८१

प्रसिद्धावस्थानां मूर्छा अन्यतमेति पूर्वपक्षः ... ५७९

देहधारणाभावात् विषयमात्रानुपलब्धेश्च मुग्धस्य जाग्रतो वैलक्षण्यसमर्थनम् ... ५७९

निःसंज्ञकत्वात् प्राणोष्मणोर्भावाच्च स्वप्नमृतिभ्यां मूर्छाया भेदस्य प्रतिपादनम् ... ५८०

सुषुप्तमोहयोः प्रयोजनकारणलक्षणभेदेभ्यो भेदस्य समर्थनम् ... ५८०

अर्धेन सुषुप्तपक्षस्य भवति मुग्धत्वम्, अर्धेन अवस्थान्तरपक्षस्य इति सिद्धान्तः ... ५८१

५. उभयलिङ्गाधिकरणम् ... ५८२—५९६

तत्पदार्थनिरूपणारम्भे प्रतिज्ञा ... ५८२

उभयलिङ्गश्रुत्युपन्यासेन संशयबीजोद्घाटनम् ... ५८२

स्वत उपाधितो वा परस्य ब्रह्मणः उभयलिङ्गत्वानुपपत्तेर्निर्विशेषमेव प्रतिपत्तव्यम्—इति सिद्धान्तः ५८३

भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति शङ्कायाः— भेदस्य उपासनार्थत्वात् अभेदे तात्पर्यात् नेति निरसनम् ... ५८३

तत्प्रधानत्वं विनिगमकमाश्रित्य अनाकारब्रह्मावधारणम् ... ५८४

प्रकाशदृष्टान्तेन औपाधिकमाकारयोगमनाकारे-

ऽप्युपासनार्थं समर्थ्यं आकारवद्विषयाणामपि
श्रुतीनां गतिप्रदर्शनम् ... ५८५
निर्विशेषत्वानुकूलतया अन्यापोहमुखेन ब्रह्म दर्श-
यन्तीनां श्रुतिस्मृतीनाम् उपन्यासः ... ५८६
जलसूर्यकादिशास्त्रीयदृष्टान्तस्य प्रकृतानुकूलतया
उपन्यासः ... ५८७
उक्तदृष्टान्तवैषम्यशङ्का, तत्प्रतिविधानं च ... ५८८
अनुप्रवेशश्रुत्युपन्यासेन उक्तदृष्टान्तदृढीकरणम् ५८९
निष्प्रपञ्चत्वपरतया सन्मात्रत्वपरतया च अधिक-
रणद्वयं कल्पयतां स्वयूथ्यानां मतस्योद्भावनम् ५८९
एवमधिकरणान्तरारम्भस्य सर्वथा वैयर्थ्यमिति
तन्निरसनम् ... ५९०
आकारश्रुतीनामपि तदितराकारप्रविलयो गति-
रिति मतमनूद्य ब्रह्मोपासनावाक्यानां पार्थगर्थ्य-
समर्थनेन तन्निरसनम् ... ५९१
एकनियोगप्रतीतेः ब्रह्मोपासनावाक्यानामेकवाक्य-
तेत्यभिमानस्य— अचोदनातन्त्रत्वाद्ब्रह्मविज्ञानं
प्रपञ्चप्रविलयं च अशक्यत्वात् अनुपपत्तेः
अन्यथासिद्धत्वाच्च नियोगगोचरादपनीय शिथि-
लीकरणम् ... ५९२
प्रपञ्चपक्षे उच्छेदात्, ब्रह्मपक्षे अनियोज्यत्वात्
जीवस्य नियोज्यताविघटनेन नियोगवार्तायाः
वार्तीकरणम् ... ५९४

नियोगाभ्युपगमेऽपि साध्यानुबन्धभेदादेकनियोगत्वमसिद्धमिति निगमनम् .... ५९५

६. प्रकृतैतावत्त्वाधिकरणम् ५९६—६०५

नेति नेतीति प्रतिषेधे संशयमुपन्यस्य, ब्रह्मापि ब्रह्मैव वा प्रतिषेध्यम् इति पक्षयोः सहेतुकमुपन्यासः ५९६

न ह्यनाश्रयः प्रतिषेधः शक्यः प्रतिपत्तुम्; न च ब्रह्मपरे शब्दे ब्रह्मणि प्रमाणे सति तत्प्रतिषेधोऽपि प्रमाणवान्; नापि वेदान्ता ब्रह्म प्रतिषेधायैव महता प्रयत्नेन प्रतिपादयन्ति— इति तयोः पक्षयोर्निरसनम् ... ५९७

प्रकृतैतावत्त्वं हि प्रतिषेधतीति सूत्रावयवविभजनम् ५९८

मूर्तामूर्तविषयतया भूतराशिवासनाराशिविषयतया कृत्स्नविषयप्रतिषेधपर्यवसायिवीप्सारूपतया च प्रतिषेधद्वयस्य नयनम् ... ५९९

'न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इति वाक्यं एतस्मादित्यस्य आदिष्टादेशनपरामर्शितया वाक्यभेदेन वाक्यैक्येन च द्विधा योजयित्वा, तदनुरोधेन 'ततो ब्रवीति च भूयः' इत्यस्य अन्यत्परमस्तीत्येतद्विषयतया अथ नामधेयमित्येतद्विषयतया च विभजनम् ... ६००

अभावो न ब्रह्माभावे क्रमते अयोग्यत्वादित्यत्र श्रुतिस्मृतिभ्यां हेतोः साधनम् ... ६०१

श्रुतिस्मृतिभ्यां ब्रह्मणः संराधनग्राह्यताप्रदर्शनम् ६०१

संराध्यसंराधकभावे जीवप्राज्ञयोरहिकुण्डलवत् प्रकाशाश्रयवच्च भेदाभेदयोर्भाविकयोरेवाविरोधं मतान्तरं निरस्य चिदात्मन औपाधिकभेदभानेऽपि स्वत एकरसत्वमेवेति अद्वैतनिष्कर्षेण निगमनम् ... ६०२

७. पराधिकरणम् ... ६०५—६११

सेतून्मानसंबन्धभेदव्यपदेशानां व्याख्यानपुरःसरं ब्रह्मणोऽन्यत्तत्त्वमस्तीति पूर्वपक्षस्योद्भावनम्... ६०५

सेतुव्यपदेशस्य विधारकत्वसामान्यपरतया परिहारः ६०७

उन्मानव्यपदेशस्य आध्यानार्थतया परिहारः ... ६०८

संबन्धभेदव्यपदेशयोरौपाधिकतया परिहारः ... ६०९

अन्यप्रतिषेधसमाश्रयण एव सर्वगतत्वमप्यात्मनः प्रामाणिकमुपपद्यते— इति उपसंहारः ... ६१०

८. फलाधिकरणम् ६११—६१४

उपपत्तेः श्रुतेश्च ईश्वर एव फलहेतुरिति सिद्धान्तेनोपक्रमः ... ६११

कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्था अपूर्वं नाम कल्प्यमानं विधिविषयस्य यागस्य फलोत्पादकत्वमुपपादयतीति जैमिनिमतस्योद्भावनम् ... ६१२

अपूर्वाग्रहं विहाय ईश्वरप्रसादोऽनुरुध्यताम्; कर्मापेक्षादपूर्वापेक्षाद्वा ईश्वरात् फलमिति सुविशदं भवेत्—इति बादरायणनिष्कर्षः ... ६१४

तृतीयः पादः— गुणोपसंहारः ... ६१७—७१४

१. सर्ववेदान्तप्रत्ययाधिकरणम् ... ६१७—६२३

निरुपाधिब्रह्मतत्त्वगोचरं विज्ञानं मन्वानस्य भेदाभेदचिन्तावताराक्षेपः ... ६१७

सोपाधिकब्रह्मप्राणादिविषयासु उपासनासु भेदाभेदविमर्श उपपन्न इति परिहारः ... ६१८

नामरूपधर्मविशेषपुनरुक्तिप्रभृतीनां भेदहेतूनामुपलम्भात् प्रतिवेदान्तं विज्ञानभेद इति पूर्वपक्षः ... ६१८

संयोगरूपचोदनाख्याविशेषात् विज्ञानानां सर्ववेदान्तप्रत्ययत्वमिति सिद्धान्तः ... ६१९

पञ्चाग्निविद्याप्राणसंवादादिषु उत्पत्तिगत एव गुणभेदो वैश्वदेवीवत् कथं न भिन्द्यात् इति विशेषाशङ्कायाः परिहारः ... ६२०

शिरोव्रतस्य स्वाध्यायधर्मत्वोपपादनेन विद्याभेदकत्वविघटनम् ... ६२१

प्रायदर्शनन्यायेन उपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः—इत्युपसंहारः .... ६२२

२. उपसंहाराधिकरणम् ६२३—६२४

सर्ववेदान्तप्रत्ययत्वे सर्वविज्ञानानां गुणोपसंहारः फलमिति निर्णयः ... ६२३

३. अन्यथात्वाधिकरणम् . ६२४—६२८

वेद्यभेदनिरूपणेन वाजिनां छन्दोगानां च उद्गीथविद्या अर्थवादसंज्ञासाम्येऽपि भिन्ना—इति निष्कर्षः ... ६२४

४. व्याप्त्यधिकरणम् ६२८—६३१

ओमित्येतदक्षरमित्यत्र सामानाधिकरण्ये अध्यासापवादैकत्वविशेषणपक्षाणां निरूपणम् ... ६२८

गौण्या लक्षणातो दुर्बलत्वात् निष्फलत्वात् पदान्तरवैयर्थ्याच्च अध्यासापवादैकत्वपक्षान् निरस्य विशेषणपक्षेण सिद्धान्तः ... ६२९

५. सर्वाभेदाधिकरणम् ... ६३१—६३३

प्राणसंवादे वसिष्ठत्वादिगुणानामनुक्तानामपि एकप्रधानसंबद्धानां कौषीतकिब्राह्मणगतेन एवंशब्देन परामृष्टं योग्यत्वादुपसंहार इति निर्णयः ६३१

६. आनन्दाद्यधिकरणम् ६३३—६३५

वास्तवानां विधेयानां च गुणानां वस्तुधर्मतया च

अनुष्ठेयतया च अव्यवस्थाव्यवस्थे व्यवतिष्ठेते —इति विवेचनम् ... ६३३

७. आध्यानाधिकरणम् ६३५—६३७

'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिकाठकश्रुतौ सर्वेषामेव अर्थादीनां परत्वं प्रतिपिपादयिषितम्—इति पूर्वपक्षः ... ६३५

दृष्टप्रयोजनत्वात् आदरातिशयाच्च पुरुषपरत्वप्रतिपादनार्थोऽयं संदर्भ इति सिद्धान्तः ... ६३६

८. आत्मगृहीत्यधिकरणम् ... ६३७—६४३

'आत्मा वा इदमेक एव' इत्यादितैत्तिरीयकश्रुतौ लोकसृष्टिवचनात् सूत्रात्मैवाभिलप्यते— इति पूर्वपक्षः ... ६३७

आकाशपूर्विकायां सृष्टौ यथा क्वचित्तेजःपूर्विकायाः सृष्टेरभिधानं तथा महाभूतसृष्ट्यनभिधानेन लोकसृष्ट्यभिधानं न विरुध्यते, परमात्मग्रहण एव प्रागुत्पत्तेरात्मैकत्वावधारणमाञ्जसमवकल्पते— इति परमात्मैवाभिलप्यते— इति सिद्धान्तः .... ६३९

सदुपक्रमस्य छान्दोग्यगतस्य संदर्भस्य आत्मोपक्रमस्य च वाजसनेयकगतस्य किमैकार्थ्यम्,

आहोस्विदर्थभेद इति संशयोपन्यासेन कल्पा-
न्तरारम्भः ... ६४१

आम्नानतन्त्रत्वादर्थपरिग्रहस्य उपक्रमतन्त्रत्वादु-
पसंहारस्य अर्थभेद एवोचितः, तादात्म्योप-
देशश्च संपत्तिपरतया नेय इति पूर्वपक्षः ... ६४१

'सदेव' 'एकमेव' इत्याद्यवधारणं तादात्म्यप्र-
तिपादनायामेवावकल्पते, न तादात्म्यसंपादना-
याम्; सामान्योपक्रमश्च न वाक्यशेषगतेन विशे-
षेण विरुध्यते; सच्छब्दार्थोऽपि न मुख्यादा-
त्मनोऽन्यः संभवति—इति प्रतिपाद्याभेद इति
सिद्धान्तः ... ६४२

९. कार्याख्यानाधिकरणम् ६४३—६४६

छन्दोगानां वाजसनेयिनां च प्राणविद्याप्रकरणे यत्
अशिशिषताम् अशितवतां च उभयत आच-
मनम् अनग्नताचिन्तनं च प्रतीयते, तदुभयमपि
विधीयते अपूर्वत्वात्, विस्पष्टविधिविभक्तिक-
त्वाद्वा आचमनमेव विधीयते इति पक्षयोरु-
द्भावनम् ... ६४३

स्मार्तस्य आचमनस्य व्यापकत्वात्, इष्टिसाहचर्या-
त्, समिधो यजतीत्यादिवत् वर्तमानापदेश-
स्यापि विधिक्षमत्वात्, 'जर्तिलयवाग्वा या जुहु-

यात्' इत्यादिवत् विधिविभक्तेरपि अविवक्षित-
त्वसंभवाच्च वासोविज्ञानमेव विधीयते नाचम-
नम्— इति सिद्धान्तः ... ६४४

१०. समानाधिकरणम् ६४६—६४८

अग्निरहस्यबृहदारण्यकयोः शाण्डिल्यविद्या अ-
भ्यासाधिकरणन्यायेन भिन्नेति पूर्वपक्षः ... ६४६

समानगुणपुनःश्रवणस्य विप्रकृष्टविद्याप्रत्यभिज्ञा-
पकत्वेनान्यपरत्वसंभवादभ्यासाधिकरणन्यायाप्र-
वृत्तेः विद्यैकत्वमिति सिद्धान्तः ... ६४७

११. संबन्धाधिकरणम् ६४८—६५१

बृहदारण्यके सत्यविद्यायामादित्यमानयोरुपनि-
षदोः संकर इति स्वरूपमात्रप्राधान्याभिप्रायेण
पूर्वपक्षः ... ६४८

सविशेषणस्यैव प्रधानत्वात् अतिदेशलिङ्गाच्च तयो-
र्व्यवस्थेति सिद्धान्तः ... ६४९

१२. संभृत्यधिकरणम् ६५१—६५२

संभृत्यादीनां गुणानां शाण्डिल्यादिविद्यासु षोड-
शकलादिविद्यासु च प्रत्यभिज्ञासंभवादुपसंहार
इति पूर्वपक्षः ... ६५१

असाधारणधर्माणामप्रत्यभिज्ञानादनुपसंहारः—
इति सिद्धान्तः ... ६५१

१३. पुरुषविद्याधिकरणम् ... ६५२—६५४

तैत्तिरीयकताण्डिनोः पुरुषविद्या पुरुषयज्ञत्वमरणावभृथत्वादिसाम्यादेकैव—इति पूर्वपक्षः... ६५२

भूयोवैलक्षण्यान्न विद्यैक्यमिति सिद्धान्तः .... ६५३

१४. वेधाद्यधिकरणम् ... ६५४—६५७

विद्यासंनिधिपठितानां प्रविध्यादिमन्त्राणां प्रवर्ग्यादिकर्मणां च अन्यत्र विनियुक्तानामपि संनिधिसामर्थ्यात् विद्यार्थत्वेनापि प्रतिपत्तिः, बृहस्पतिसवदृष्टान्तेन, खादिरत्वादिदृष्टान्तेन वा—इति पूर्वपक्षः ... ६५४

प्रबलैः श्रुत्यादिभिरन्यत्र विनियुक्तानाम अविरोधेऽपि दुर्बलसंनिधिमात्रेण न संभवति विद्यासु विनियोगः— इति सिद्धान्तः ... ६५६

१५. हान्यधिकरणम् ६५८—६६२

यत्र हानमात्रं सुकृतदुष्कृतयोः श्रूयते, तत्र अश्रूयमाणं विद्यान्तरगोचरशाखान्तरीयश्रवणविषयमप्युपायनमनवश्यं भावि न संनिपतेत्—इति पूर्वपक्षः ... ६५८

एकविंशादिवादवत् अर्थवादान्तरापेक्षार्थवादान्तरप्रवृत्तेः संभवात्, अष्टदोषदुष्टविकल्पप्रसङ्गभयेन कुशादिवत् वाक्यान्तरस्य वाक्यान्तरशेष-

त्वस्य औचित्याच्च, हानशब्दशेष उपायनशब्द उपायनमनुवर्तयति केवलहानश्रवणेऽपि स्तुतिप्रकर्षाय— इति सिद्धान्तः ... ६५९

विधूननश्रुतौ विधूननं चालनमेवेति प्राप्ते, वाक्यशेषे उपायनश्रवणबलात् हानमेवेति निर्णयः —इति वर्णकान्तरम् .... ६६१

१६. सांपरायाधिकरणम् ६६२—६६३

यथाश्रुति अर्धपथ एव सुकृतदुष्कृतविमोक्षः प्रतिपत्तव्यः, एवं च न पर्यङ्कविद्यातस्तत्प्रक्षय इति पूर्वपक्षः ... ६६२

पाठक्रमाद्बलीयांसौ श्रुत्यर्थावनुरुध्य समर्थस्य क्षेपायोगात् मरणात् प्रागेव सुकृतदुष्कृतक्षय इति सिद्धान्तः ... ६६२

१७. गतेरर्थवत्त्वाधिकरणम् ... ६६४—६६५

उपास्तिवत् बोधोऽपि गतिमान्—इति पूर्वपक्षः ६६४

प्राप्तिफलकस्योपासनस्य गतिमत्त्वेऽपि स्वास्थ्यफले बोधे व्यर्था गतिर्न संनिपतेत्— इति सिद्धान्तः ... ६६४

१८. अनियमाधिकरणम् ६६५—६६७

यासु विद्यासु पन्थाः श्रूयते तास्वेव प्रकरणबलात् स नियम्येत—इति पूर्वपक्षः ... ६६५

'ये चेमे' 'शुक्लकृष्णे' इत्यादि श्रुतिस्मृतिभ्यां प्रकरणस्य बाधात् सर्वासामेव सगुणविद्यानां पन्थाः— इति सिद्धान्तः ... ६६५

१९. यावदधिकाराधिकरणम् ... ६६७—६७१

अपान्तरतमःप्रभृतीनां देहान्तरोत्पत्तिदर्शनात् ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वम् अहेतुत्वं वा— इति पूर्वपक्षः ... ६६८

यावदधिकारमाधिकारिका अवतिष्ठन्ते, तदवसाने च अपवृज्यन्ते— इत्युपपन्नत्वात् विदुषः कैवल्यसिद्धिरैकान्तिकी इति सिद्धान्तः ... ६६९

२०. अक्षरध्यधिकरणम् ६७१—६७३

प्रधानतन्त्राणामङ्गानामिव अक्षरतन्त्राणां प्रतिषेधरूपाणां विशेषणानामपि यत्र क्वचिदप्युत्पन्नानां सर्वत्राक्षरेणाभिसंबन्धः— इति आनन्दादयः प्रधानस्येत्यस्य प्रपञ्चः ... ६७१

२१. इयदधिकरणम् ... ६७३—६७४

छत्रिन्यायवाक्यशेषन्याययोः मुख्यार्थसंभवेनानवतारात्, द्वा सुपर्णेत्यत्र ऋतं पिबन्तावित्यत्र च वेद्यभेदेन विद्याभेद इति पूर्वपक्षः ... ६७३

उपक्रमोपसंहारानुरोधेन मध्यस्यापि नेयत्वात् ऐकविद्यम्— इति सिद्धान्तः ... ६७३

अस्य योगस्य गुहाधिकरणप्रपञ्चत्वप्रदर्शनम् ... ६७४

२२. अन्तरत्वाधिकरणम् ६७४—६७६

उपस्तकहोलप्रश्नयोरभ्याससामर्थ्याद्विद्याभेदे शङ्कि-
ते—शतकृत्वोऽपि हि पथ्यं वदन्त्याप्ता इति न्या-
येन वस्तुस्वरूपं पुनःपुनरुच्यमानमपि न दोष-
मावहति ; अत एव ताण्डिनां षष्ठे नवकृत्वो
ऽप्युपदेशे न विद्याभेदः ; सर्वान्तरत्वविरोधश्च
विद्याभेदपक्षे स्फुट एव इति विद्यैकत्वनिर्णयः ६७४

२३. व्यतिहाराधिकरणम् ६७६—६७८

ऐतरेयिणां जाबालानां च व्यतिहाराम्नाने निकृष्टे
जीवे उत्कृष्टरूपाभेदचिन्तनमेकरूपमेवेति प्राप्ते,
व्यतिहारेण द्विरूपा मतिः कर्तव्या, वचनप्रा-
माण्यात् ; अन्वाचयशिष्टं तु तादात्म्यदार्ढ्यं भ-
वतोपेक्षामहे — इति सिद्धान्तः .... ६७६

२४. सत्याद्यधिकरणम् ६७८—६८०

वाजसनेयकसत्यविद्यायां यक्षादित्यवाक्ययोः फल-
संयोगभेदात् नित्यकाम्यदर्शपूर्णमासवत् द्वे सत्य-
विद्ये इति पूर्वपक्षे—प्रधानफलसत्त्वे अङ्गे फल-
श्रुतेरर्थवादत्वात्, प्रधानविधौ च प्रकृते कर्मि-
पदाभावेन रात्रिसत्रन्यायेन आर्थवादिकफल-
कल्पनायां जातेष्टिवत् अगृह्यमाणविशेषतया

संवलिताधिकारकल्पनाया औचित्यात्, प्रत्यभिज्ञाबलाच्च एकैव सत्यविद्या—इति सिद्धान्तः... ६७८

वाजसनेयके छान्दोग्ये च अक्ष्यादित्यपुरुषविषया विद्या एकैवेति वाजसनेयिभ्यः सत्यादिगुणोपसंहारं मन्यमानानां केषांचित् व्याख्यानमुद्भाव्य, छान्दोग्यविद्यायाः कर्माङ्गावबद्धाया अनुबन्धाभेदेऽपि साध्यभेदात् भेद एवेति निरूपणेन तस्य निरसनम् .... ६७९

२५. कामाद्यधिकरणम् ... ६८०—६८१

दहरहार्दविद्ययोः सगुणनिर्गुणत्वेन भेदेऽपि, उभयत्र आत्मन एकत्वात्, सगुणविद्यासंबन्धिनां सत्यकामत्वादिगुणानाम् अन्यत्र स्तुत्यर्थमुपसंहारः; निर्गुणविद्यासंबन्धिनां वशित्वादिगुणानामितरत्र सत्यकामत्वादिनान्तरीयकतया प्राप्तिं द्रढयितुम् उपसंहारः—इति व्यवस्था ... ६८०

२६. आदराधिकरणम् ... ६८१—६८४

वैश्वानरविद्यागतप्राणाग्निहोत्रस्य विषयत्वेनोपन्यासः ६८२

'पदकर्माप्रयोजकं नयनस्य परार्थत्वात्' इति न्यायेन भोजनप्रयुक्तभक्तागमनसंयोगेन श्रूयमाणा प्राणाहुतिः भोजनाभावे न भक्तं प्रयोजयितुमीष्टे —इति पूर्वपक्षाभावशङ्काया उत्थापनम् ... ६८२

अतिथिभोजनस्य प्राथम्यनिन्दापूर्वकं स्वामिभोजनं समयादपकृष्य अतिथिभोजनस्य पुरस्ताद्विदधती जाबालश्रुतिः प्राथम्यलोपमप्यसहमाना नतरां धर्मिलोपं सहेत; तद्यद्भक्तमित्यादिवाक्यं च भोजनागतभक्तद्रव्यतागुणविशेषमुपदिशति; पर्णासंयाजवत् एकदेशद्रव्यसाधनस्यापि प्रयोजकत्वं संगच्छते; अतश्च आधाने पवमानेष्टिषु अग्निहोत्रहवणीलोपेऽपि हविर्निर्वापालोपवत् भोजनलोपेऽपि न प्राणाग्निहोत्रलोप इति—उक्तशङ्कानिरसनपूर्वकं पूर्वपक्षस्योद्भावनम् ... ६८२

'तद्यद्भक्तम्' इत्यादिवाक्यं सिद्धवद्भक्तोपनिपातपरामर्शेन भोजनार्थद्रव्यसाध्यतां प्राणाहुतीनां विदधाति, न तु चोदकप्राप्तद्रव्यबाधया भक्तद्रव्यम्, अग्निहोत्राङ्गानां सांपादिकत्वविरोधात्; अत 'उत्तरार्धात् स्विष्टकृते समवद्यति' इतिवदप्रयोजकलक्षणापन्नानां प्राणाहुतीनाम्, क्रतुप्रयुक्ताप्प्रणयनाश्रितस्य गोदोहनस्य क्रतुलोपे लोपवत्, आमिक्षार्थदध्यानयनलोपे वाजिनलोपवच्च, भोजनलोपे लोप एवेति सिद्धान्तः ... ६८३

२७. तन्निर्धारणाधिकरणम् ... ६८४—६८७

कर्माङ्गव्यपाश्रयाणाम् अनारभ्याधीतानाम् उद्गीथादिविज्ञानानां 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फ-

लक्षुतिरर्थवादः स्यात्' इति न्यायेन रात्रिसत्र-
न्यायगोचरादपनीयमानानां पर्णमयीत्वादिवत् नि-
त्यता— इति पूर्वपक्षः ... ६८५

'उभौ कुरुतः' इति वचनम् अनित्यत्वं गमयति;
विद्वदविद्वत्प्रयोगयोः पृथक्करणेन कर्मणः पृथगेव
विज्ञानस्य फलश्रवणम् नार्थवादमात्रं युक्तं प्रति-
पत्तुम्; अतः व्यापारात्मकविज्ञानानां पर्णतावै-
लक्षण्यात्, अनङ्गस्य ओंकारस्य उपासनं न सं-
स्कार इति अङ्गनादिवैलक्षण्याच, गोदोहनादिव-
दनित्यता— इति सिद्धान्तः ... ६८५

२८. प्रदानाधिकरणम् ... ६८७—६९०

तत्तच्छ्रुत्यर्थालोचनया वायुप्राणयोः स्वरूपाभेदे सि-
द्धे, तद्विषयोपासनाया अप्यभेदः; उत्पन्नशिष्टश्च
गुणो न भिन्द्यात्—इति प्रयोगस्याप्यैक्यम्—
इति पूर्वपक्षः ... ६८७

सत्यपि विध्यैकत्वे राजादिगुणकेन्द्रप्रदानवत् अग्नि-
होत्रवद्वा प्रयोगभेदो गुणभेदादाश्रयणीय एवेति
सिद्धान्तः ... ६८९

२९. लिङ्गभूयस्त्वाधिकरणम् ... ६९०—६९८

मनश्चिदादिसांपादिकाग्नीनां यत्किंचित्करणेन सि-
द्धिः—सदा सर्वैरनुष्ठेयता प्रसिद्धसंख्यातिरेकश्च—

इत्येवंजातीयकैर्लिङ्गैः स्वातन्त्र्यम्—इति सिद्धान्तप्रतिज्ञा ... ६९१

मानसग्रहकल्पस्य दशरात्रसंबन्धिनि द्वादशाहसंबन्धिनि वा दशमेऽहनि अङ्गत्ववत्, क्रियाप्रकरणात्क्रियाशेषत्वमेवाग्निकल्पस्य; लिङ्गत्वेनोपन्यस्तं च अन्यार्थदर्शनमात्रम्—इति पूर्वपक्षः ... ६९१

अतिदेशबलात् क्रियानुप्रवेशस्य दृढीकरणम् ... ६९२

अवधारणश्रुतिः सातत्यदर्शनं लिङ्गम्, पुरुषसंबन्धपरं वाक्यं च प्रकरणमपोद्य स्वातन्त्र्यमवगमयन्ति – इति सिद्धान्तः ... ६९२

मनोवृत्तिषु क्रियाङ्गानामनुबन्धस्य अन्यथानुपपत्त्या क्रत्वर्थत्वविघटनम् ... ६९५

अङ्गावबद्धश्रुतितो वैरूप्यस्य समर्थनम् ... ६९५

अतिदेशस्य विकल्पार्थत्वायोगात् क्रियानादरपर्यवसायिनः अग्नित्वसामान्यमवलम्ब्य सिद्धान्तानुगुण्यसमर्थनम् ... ६९६

प्रकरणादुत्कर्षस्य उपष्टम्भकतया अवेष्टिन्यायस्य उपन्यासः ... ६९६

मानसग्रहदृष्टान्तस्य विघटनम् ... ६९७

पूर्वोत्तरभागयोः विद्याप्रधानत्वात् तन्मध्यपातिनोऽपि विद्याप्रधानत्वम्— इति सिद्धान्तोपसंहारः ६९८

३०. शरीरे भावाधिकरणम् ... ६९८—७०२

देहव्यतिरिक्तस्य आत्मनोऽस्तित्वम् अधिकरणस्य तात्पर्यमुक्त्वा, अधस्तनतन्त्रोक्तेन सौत्रस्यास्य तदस्तित्वस्य अपौनरुक्त्यं समर्थ्य, पूर्वोत्तरतन्त्रशेषत्वं प्रतिपाद्य, पूर्वाधिकरणसंगतेश्च प्रदर्शनम् .. ६९८

देहात्मवादस्य सहेतुकमुद्भावनम् ... ६९९

देहधर्मविलक्षणा ज्ञानादयः देहभावाभावित्वात् देहातिरिक्ताश्रयाः; उपलब्धिरूपश्च आत्मा भूतभौतिकातिरिक्त एव भवितुमर्हति—इति सिद्धान्तः ७००

३१. अङ्गावबद्धाधिकरणम् ... ७०२—७०४

उद्गीथादिकर्माङ्गावबद्धाः प्रत्ययाः प्रतिवेदं स्वशाखास्वेव व्यवतिष्ठेरन्, सांनिध्यात्— इति पूर्वपक्षः ... ७०२

उद्गीथश्रुतेरविशेषेण विशिष्टार्थप्रत्यायकत्वात् मन्त्रादिवत् सर्वशाखास्वनुवर्तेरन्— इति सिद्धान्तः ७०३

३२. भूमज्यायस्त्वाधिकरणम् ... ७०४—७०६

छान्दोग्ये वैश्वानरविद्यायां श्रुतयोः व्यस्तसमस्तोपासनयोः उभयथाप्युपासनम्; अगृह्यमाणविशेषतया च न वैश्वानराधिकरणन्यायस्य अवकाशः इति पूर्वपक्षः .... ७०४

एकवाक्यतालाभाय वाक्यभेदपरिहाराय च सम-

स्तोपासनपरतैव संदर्भस्येति सिद्धान्तः ... ७०५

ज्यायस्त्ववचनात् व्यस्तोपासनानुमतेः एकदेश्यभि-
प्रेताया दूषणम् ... ७०६

३३. शब्दादिभेदाधिकरणम् ... ७०७—७०९

शाण्डिल्यदहरादिविद्यानां वस्तुनिष्ठताभ्रमेण अनुब-
न्धभेदेऽप्यभेदं मन्यमानानाम्— विद्याकात्स्न्र्याय
स्वपरशाखाविहितमेकवेद्यव्यपाश्रयं सर्वमपि गुण-
जातमुपसंहर्तव्यमिति पक्षस्योद्भावनम् ... ७०७

उपासनवाक्यानां कार्यनिष्ठतया शब्दादिभेदात्
विद्याभेदे व्यवस्थिते, निरङ्कुशो गुणोपसंहारः अ-
शक्यः अनुचितश्चेति सिद्धान्तः ... ७०७

अस्याधिकरणस्य पादादावेव आर्थिकी संगतिरिति
प्रतिपादनम् ... ७०९

३४. विकल्पाधिकरणम् ... ७०९—७१०

समानफलानां दर्शपूर्णमासज्योतिष्टोमादीनामिव अ-
हंग्रहाणां याथाकाम्ये शङ्किते, उपास्यसाक्षात्कार-
फलानामेतेषां विकल्प एव नियमवान्— इति
निर्णयः ... ७०९

३५. काम्याधिकरणम् ... ७१०—७११

प्रतीकोपासनेषु याथाकाम्यनिर्णयः ... ७१०

३६. यथाश्रयभावाधिकरणम् ... ७११—७१४

अङ्गानां प्रयोगवचनेन समुच्चयनियमात् तदव-

द्धानां पुरुषार्थानामपि समुच्चयनियम इति पूर्वपक्षः ... ७११

प्रयोगविधिर्नानङ्गानामङ्गावबद्धोपासनानां संग्राहकः; अङ्गतन्त्रत्वं चोपासनानां तदभावे अभाव एव, ननु तन्नियतसहभावः; अतोऽङ्गावबद्धोपासनानां याथाकाम्यम्— इति सिद्धान्तः ... ७१२

चतुर्थः पादः— अन्तरङ्गबहिरङ्गसाधनविचारः ... ७१७—७६०

१. पुरुषार्थाधिकरणम् ७१७—७२७

औपनिषदमात्मज्ञानमपवर्गसाधनतया पुरुषार्थमिति सिद्धान्तेनोपक्रमः ... ७१७

द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादिति न्यायेन कर्तृसंस्कारद्वारा क्रत्वर्थमेवात्मज्ञानमिति जैमिनिमतेन पूर्वपक्षः ... ७१८

ब्रह्मविदां कर्माचारदर्शनस्य लिङ्गतया उपन्यासः ७१९

तृतीयाश्रुतेः, समन्वारम्भवचनस्य, वेदार्थज्ञानवतः कर्मविधानस्य यावज्जीवं कर्मनियमस्य च उपन्यासः ... ७२०

औपनिषदात्मज्ञानस्य क्रत्वनुष्ठानविरोधिनः क्रतुसंबन्ध एव नास्ति—इति सिद्धान्तिनां प्रतिविधानम् ... ७२१

अकर्माङ्गत्वदर्शनस्य अनन्यथासिद्धस्य प्रतिपादनम् ७२३
तृतीयाश्रुतेः प्रकृतविद्यामात्राभिसंबन्धप्रदर्शनेन वि-
घटनम् ... ७२३
समन्वारम्भवचनं मुमुक्षुविषयमपि विभागेनावक्लृप्ते, अविभागेनाप्यमुमुक्षुविषयमिति प्रति-
पादनम् ... ७२४
अध्ययनमात्रवत एव कर्मविधिः, न तु उपनिषद-
ध्ययनवत इति लिङ्गान्तरस्य विघटनम् .... ७२४
नियमश्रवणमविद्यावद्विषयम्, विद्वद्विषयमपि विद्या-
स्तुत्यर्थं वा— इति परिहारः ... ७२५
प्रत्यक्षीकृतविद्याफलानां स्वेच्छातः प्रजादित्यागलि-
ङ्गात् अशेषक्रियादिविभागोपमर्दकत्वाच्च विद्यायाः
स्वातन्त्र्यमिति प्रतिपादनम् ... ७२६
ऊर्ध्वरेतःसु चाश्रमेषु विद्याश्रवणात् मिथोव्यतिरे-
किणोः विद्याकर्मणोर्नाङ्गाङ्गिभावः— इति प्रति-
पादनम् ... ७२७
२. परामर्शाधिकरणम् ... ७२७—७३३
विध्यभावात् स्मृत्याचारप्रसिद्धेश्च प्रत्यक्षश्रुतिविरु-
द्धाया अप्रमाणत्वात् नास्त्यूर्ध्वरेताः— इति प्र-
त्यक्षं जाबालानां पारिव्राज्यविधानमनपेक्ष्य आक्षेपः ७२७
सिद्धवत्परामर्शादपि शास्त्रान्तरविहितेन गार्हस्थ्येन
तुल्यवदाश्रमान्तरमप्यभिदधतः आश्रमान्तरस्य

अनुष्ठेयता प्रत्येतुं शक्यते— इति सिद्धान्तः... ७२९

उपरिधारणवत् अपूर्वत्वात् आश्रमपरामर्शश्रुतिः विधिरेवेति प्रतिपादनम् ... ७३०

परामर्शेऽपि इतरेषामाश्रमाणां संस्तवसामर्थ्यात् ब्रह्मसंस्थता विधातव्या— इति पक्षान्तरम् ... ७३१

चतुर्ष्वाश्रमेषु यस्य कस्यचित् ब्रह्मसंस्थता— इति पक्षमुन्द्राव्य— यज्ञाद्यसाधारणधर्मद्वारा आश्रमान्तरवत् ब्रह्मसंस्थशब्देनैव ब्रह्मनिष्ठाप्रधानश्चतुर्थाश्रमो गृह्यते; पृथग्व्यपदेशश्च ब्रह्मसंस्थं पूर्वोक्तेभ्य आश्रमिभ्यो भिन्नमवगमयति; यौगिकोऽप्ययं ब्रह्मसंस्थशब्दः असंभवात् अप्रकृते वर्तयितव्यः— इति निष्कर्षः ... ७३१

३. स्तुतिमात्राधिकरणम् ... ७३४—७३५

रसतमत्वादीनां कर्माङ्गसंस्तवार्थतामाशङ्क्य विध्यर्थताया निर्णयः ... ७३४

४. पारिप्लवाधिकरणम् ... ७३५—७३६

उपनिषदाख्यानानां 'सर्वाण्याख्यानानि पारिप्लवे' इति सर्वश्रुतिबलात् पारिप्लवार्थतामाशङ्क्य, सर्वशब्दस्य 'मनुर्वैवस्वतो राजा' इत्येवं पारिप्लवेन विशेषितान्येव आख्यानान्यपेक्ष्य प्रवृत्तत्वात् विद्यासंनिधिरप्रतिद्वन्द्वी विद्यैकवाक्यतां गमयतीति सिद्धान्तः ... ७३५

५. अग्नीन्धनाद्यधिकरणम् ... ७३७

आश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानि— इत्याद्याधिकरणफलस्य उपसंहारः, न तु स्वसिद्धौ— इत्यधिकविवक्षया ... ७३७

६. सर्वापेक्षाधिकरणम् ... ७३७—७४०

प्रमाणतश्च प्रमेयत उत्पत्तौ च कार्ये च न ज्ञानस्य कर्मापेक्षेति पूर्वपक्षः ... ७३७

योग्यतावशेन उत्पत्तौ विद्यया कर्माण्यपेक्ष्यन्ते— इति सिद्धान्तः ... ७३७

महावाक्यैकवाक्यतावष्टब्धं वर्तमानापदेशाभिनिवेशं 'तस्मात्पूषा' इत्यादाविव अपूर्वत्वादवान्तरविधानस्य समर्थनेन शिथिलीकृत्य, शमादीनां यज्ञादीनां च साधनभावस्य विद्याविविदिषासंयोगभेदात् अन्तरङ्गबहिरङ्गतानिरूपणेन विवेचनम् ७३८

७. सर्वान्नानुमत्यधिकरणम् ... ७४०—७४३

सर्वान्नाभ्यनुज्ञानं प्राणसंवादे श्रूयमाणं भक्ष्याभक्ष्यविभागशास्त्रस्य सामान्यतः प्रवृत्तस्य बाधकं प्रवृत्तिविशेषकरतालाभेन विधीयमानमेवाश्रीयेत— इति पूर्वपक्षः ... ७४०

न हि कौलेयकमर्यादमन्नं मनुष्यजातिना युगपत् पर्यायेण वा शक्यमत्तुम्— इति प्राणान्नविज्ञान-

प्रशंसार्थ एवायमर्थवाद इति सिद्धान्तः ... ७४१

आपदि प्राणरक्षार्थमेव सर्वान्नाम्यनुज्ञानमित्यत्र स्मृतेः श्रुतेश्च उपन्यासः ... ७४२

८. आश्रमकर्माधिकरणम् ... ७४३—७४५

संयोगपृथक्त्वन्यायेन आश्रमकर्मणां नित्यानित्यसंयोगस्य निष्कर्षः ... ७४३

प्रकरणान्तराधिकरणन्यायगोचरात् 'तमेतं वेदानुवचनेन...' इत्यादिवाक्योपात्तकर्मणामपनयनम् ७४४

९. विधुराधिकरणम् ... ७४५—७४७

दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणापि अर्थिनमधिकरोति श्रवणादिषु—इति, रैक्वाचक्नवीप्रभृतीनां निदर्शनेन आश्रमधर्माभावेऽपि वर्णधर्मविशेषाणामनुग्रहेण च विधुरादीनां विद्यायामधिकारस्य समर्थनम् ... ७४५

१०. तद्भूताधिकरणम् ... ७४७—७४८

आरोहवत्प्रत्यवरोहोऽपि कदाचित् ऊर्ध्वरेतसां स्यात् इति मन्दाशङ्कायाः आरोहनियमस्य तत्तुल्यताभावस्य शिष्टाचाराभावस्य च व्याख्यानेन प्रत्याख्यानम् ... ७४७

११. आधिकारिकाधिकरणम् ... ७४८—७४९

भ्रष्टोर्ध्वरेतसः प्रायश्चित्तमस्ति ; स्मार्तं प्रायश्चित्ताद-

र्शनं तु यत्नगौरवार्थम्— इति प्रतिपादनम् ... ७४८

१२. बहिरधिकरणम् ... ७५०

कृतनिर्णेजनस्याप्यारूढपतितस्य अव्यवहार्यतायाः प्रतिपादनम् ... ७५०

१३. स्वाम्यधिकरणम् ... ७५१—७५२

उत्सर्गतः फलस्य यजमानगामित्वेऽपि परिक्रीतेनानुष्ठितं स्वामिनः फलायेत्युपपत्तेः अङ्गध्यानम् आर्त्विज्यमिति निष्कर्षः ... ७५१

१४. सहकार्यन्तरविध्यधिकरणम् ... ७५२—७५५

'अथ मुनिः' इत्यत्र मौनं ज्ञानातिशयरूपम् अनुत्पन्नविद्यातिशयं संन्यासिनमधिकृत्य, मा भूत् भेददर्शनोपरोध इति, विधिविभक्त्यश्रवणेऽपि विधीयमानमास्थेयम्, विधिमुख्ये सहकारितया समिदादिर्विध्यन्त इव— इति निष्कर्षः ... ७५२

छान्दोग्ये गार्हस्थ्येनोपसंहारः बहुलायाससाध्यकर्मबहुलत्वात् आश्रमान्तरधर्मसमवायाच्च तस्य, न पुनः तेन समापनात्—इति प्रतिपादनम् ... ७५४

१५. अनाविष्काराधिकरणम् ... ७५५—७५६

'बाल्येन तिष्ठासेत्' इत्यत्र बाल्यं न कामचारवादभक्षणता यथोपपादमूत्रपुरीषत्वं चेति सकला बा-

ल्चर्या, प्रधानविरोधात्; किंतु अप्ररूढेन्द्रियत्वादिरान्तरो भावविशेषः— इति निष्कर्षः ... ७५५

१६. ऐहिकाधिकरणम् ... ७५७—७५९

न हि कुम्भदिदृक्षुश्चक्षुषी समुन्मीलयति कालान्तरीयाय कुम्भदर्शनाय, किंतु तादात्विकाय; तथा च ऐहिकमेव विद्याजन्मेति पूर्वपक्षः ... ७५७

श्रवणादिद्वारेणापि विद्योत्पद्यमाना प्रतिबन्धक्षयापेक्षयैव उत्पद्यत इति ऐहिकमामुष्मिकं विद्याजन्मेति श्रुतिस्मृत्युपन्यासेन सिद्धान्तः ... ७५७

१७. मुक्तिफलाधिकरणम् ... ७५९—७६०

विद्यात्वं सामान्यतो दृष्टमवलम्ब्य मुक्तावपि उत्कर्षापकर्षौ स्यातामिति प्राप्ते, आगमतत्प्रभवयुक्तिबाधितत्वेन ब्रह्मरूपायां मुक्त्यवस्थायां न कोऽप्यतिशयोऽवकाशं लभते— इति सिद्धान्तः ७५९

चतुर्थोऽध्यायः— फलाश्रयविचारः ७६१—८६२

प्रथमः पादः— जीवन्मुक्तिनिरूपणम् ७६३—७९६

१. आवृत्त्यधिकरणम् ... ७६५—७७२

अत्यन्तपरोक्षमुक्तिलक्षणफलार्थानि श्रवणादीनि यावद्विधानमेवानुष्ठेयानीति पूर्वपक्षः ... ७६५

दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति— इति सिद्धान्तः ... ७६६

उद्गीथध्यानावृत्तिलिङ्गेन सिद्धान्तस्य दृढीकरणम् ... ७६७
साध्येऽनुभवे अर्थवत्यपि प्रत्ययावृत्तिः न तथा
भवितुमर्हत्यसाध्ये निर्विशेषब्रह्मानुभवे—इत्याक्षेपः ७६७
वेदान्तार्थज्ञानाभ्यासाहितसंस्कारसचिवेन अन्तः-
करणेन जीवस्य ब्रह्मस्वभावः समीक्षितुमलम्—
इति परब्रह्मविषयेऽपि प्रत्यये तदुपायोपदेशेष्वावृ-
त्तिसिद्धिः इति समाधिः .... ७६९
२. आत्मत्वोपासनाधिकरणम् ... ७७२—७७५
तत्त्वमसीत्याद्याः संसारिणः परमात्मनश्च विरुद्धध-
र्मसंसर्गेण नानात्वविनिश्चयात् प्रतीकोपदेशा एवे-
ति पूर्वपक्षः ... ७७२
नेदं प्रतीकदर्शनम्, आत्मत्वेनोपगमात्, तथैवो-
पदेशात्, गौणत्वप्रसङ्गात्, वाक्यवैरूप्यात्,
भेददृष्ट्यपवादाच्च— इति सिद्धान्तः ... ७७३
३. प्रतीकाधिकरणम् ... ७७५—७७६
'मनो ब्रह्म' इत्यादिषु सर्वत्र 'अहं मनः' इत्या-
दि द्रष्टव्यम्, ब्रह्मणो मुख्यमात्मत्वमिति; उपपन्नं
च मनःप्रभृतीनां ब्रह्मविकारत्वेन तादात्म्यम्—
इति पूर्वपक्षः ... ७७५
'यावद्वचनं वाचनिकम्' इति न्यायात् उपासना-
वाक्यानां तत्त्वमस्यादिसंदर्भैरेकवाक्यत्वाभावाच्च
न प्रतीकेष्वात्मदृष्टिः— इति सिद्धान्तः ... ७७५

४. ब्रह्मदृष्ट्यधिकरणम् ... ७७६—७७९

ब्रह्मणः प्रधानस्य आदित्यादिदृष्टिभिः संस्कर्तव्यतैव शास्त्रार्थ इति पूर्वपक्षः ... ७७६

शब्दगत्यनुरोधेन प्राधान्यनिर्णये, शास्त्रार्थे च संदिग्धे लोकानुसारतोऽपि निर्धारणस्य संभवात्, इति परस्य ब्रह्मशब्दस्य प्रतीतिपरत्वाच्च ब्रह्मदृष्टिरेव आदित्यादिषु स्यात्— इति सिद्धान्तः ... ७७७

५. आदित्यादिमत्यधिकरणम् ... ७७९—७८२

अङ्गावबद्धोपासनेषु उत्कर्षानवधारणादनियमः अथवा फलसंनिकर्षबलात् अनङ्गेष्वेव अङ्गमतिरिति पक्षावुद्भाव्य, आदित्यादि मतीनाम् उद्गीथादिषु संस्कारकत्वेन उपयोगोपपत्तेः अनङ्गबुद्ध्या अङ्गान्येव उपास्यानि— इति सिद्धान्तः ... ७७९

६. आसीनाधिकरणम् ... ७८२—७८४

मानसमुपासनं न प्रतीक्षते शरीरस्थितेर्नियमम्— इत्याक्षिप्य समानप्रत्ययप्रवाहकरणविरुद्धत्वादासनातिरिक्तशरीरस्थितेः आसीनकर्मैव उपासनमिति सिद्धान्तः ... ७८२

७. एकाग्रताधिकरणम् ... ७८४—७८५

दिग्देशकालेषु अर्थलक्षण एव नियम इति सुहृद्भावेन उपदेशः ... ७८८

८. आप्रायणाधिकरणम् ... ७८५—७८६

प्रतिपत्तव्यफलभावनात्मकेषु प्रत्ययेषु आप्रायणादावृत्तिरिति निष्कर्षः ... ७८५

९. तदधिगमाधिकरणम् ... ७८६—७८९

शास्त्रव्याकोपप्रसङ्गात् मोक्षस्यापि देशकालनिमित्तापेक्षतयोपपत्तेः ब्रह्माधिगमेऽपि न दुरितनिवृत्तिः इति पूर्वपक्षः ... ७८६

'नाभुक्तं कर्म क्षीयते' इत्यादि शास्त्रमप्रतिबद्धसामर्थ्यकर्माभिप्रायम्— इति, ब्रह्माधिगमे उत्तरपूर्वयोर्दुरितयोरनभिसंबन्धविनाशाविति सिद्धान्तः ७८७

१०. इतरासंश्लेषाधिकरणम् ... ७८९—७९०

विशेषविधानस्य शेषप्रतिषेधनान्तरीयकत्वात् न धर्मस्य ब्रह्मज्ञानेन उच्छेद इति संभावनायाम्, हष्टेनैव अशेषविशेषप्रविलयद्वारेण ब्रह्मज्ञानमुच्छिन्द्यात् सुकृतमपि, पाप्मश्रुत्या च पुण्यमपि ग्रहीतव्यम्— इति निर्णयः ... ७८९

११. अनारब्धाधिकरणम् ... ७९०—७९१

आरब्धविपाकस्य कर्मजातस्य समुदाचरद्वृत्तितया इतरेभ्यः प्रसुप्तवृत्तिभ्यः बलवत्त्वात् चिरतानुवादेन देहपातावधेरेव विधायकम् 'तस्य तावदेव चिरम्' इत्याद्यागममनुसृत्य प्रारब्धविपाकानां

कर्मणा प्रक्षयाय तदीयसमस्तफलोपभोगः प्रतीक्ष्यत एव सत्यपि तत्त्वसाक्षात्कारे—इति निर्णयः ७९०

१२. अग्निहोत्राद्यधिकरणम् ... ७९२—७९३

ब्रह्मविद्यासामर्थ्यादारादुपकारकाणां नित्यनैमित्तिकानां कर्मणां नोच्छेदः इति निष्कर्षः ... ७९२

१३. विद्याज्ञानसाधनत्वाधिकरणम् ... ७९३—७९५

विद्यारहितस्यापि कयापि मात्रया परविद्योत्पादोपयोगोऽस्त्येवेति विद्यारहितमपि यज्ञादि परविद्यार्थिनानुष्ठेयमिति निर्णयः ... ७९३

१४. इतरक्षपणाधिकरणम् ... ७९६

अनारब्धकार्ये इत्यत्र नञःफलस्य भोगेनारब्धकर्मनिवृत्तेः स्फुटीकरणम् .... ७९६

द्वितीयः पादः— उत्क्रान्तिक्रमः ... ७९७—८१८

१. वागधिकरणम् ... ७९९—८०१

'वाङ्मनसि संपद्यते' इत्यत्र श्रत्यनुग्रहाय वाच एव मनसि लय इति पूर्वपक्षस्य—परत्र अविभागवचनात् दृष्टानुसारेणागमस्य अभेदोपचारपरत्वात् वाग्वृत्तिरेव मनसि संपद्यते—इति समाधानम् ... ७९९

उक्तयुक्त्या चक्षुरादीन्यपि वृत्तिद्वारैव मनसि संपद्यन्ते—इति प्रतिपादनम् ... ८००

२. मनोऽधिकरणम् ... ८०१—८०२

'मनः प्राणे' इत्यत्र 'अन्नमयं हि सोम्य मनः' इत्यादिश्रुत्या प्रकृतिविकारभावसंभवात् मनस एव प्राणे लय इति पूर्वपक्षं प्रापय्य, सुषुप्त्यादौ मनोवृत्तीनामेवोपशमदर्शनात् उक्तश्रुत्या च साक्षात्प्रकृतिविकारभावाभानात् मनः वृत्तिद्वारैव प्राणे प्रलीयत इति सिद्धान्तः .... ८०१

३. अध्यक्षाधिकरणम् ... ८०२—८०५

'प्राणस्तेजसि' इत्यत्र यथाश्रुति प्राणवृत्तेः भूतविशेषे लय इत्याशङ्कायाः—श्रुत्यन्तरगतस्यापि विशेषस्यापेक्षणीयत्वात् प्राणः विज्ञानात्मन्यवतिष्ठते तदुपगमानुगमावस्थानश्रुतिभ्यः इति निरसनम् ... ८०२

'प्राणस्तेजसि' इत्यत्र प्राणसंपृक्ताध्यक्षस्यैव ग्रहणमिति निर्णयः ... ८०३

कार्यस्य शरीरस्यानेकात्मकत्वात् अनेकात्मकेनैव कारणेनापि भाव्यमिति तेजःपदं तत्सहचरितसूक्ष्मभूतपञ्चकोपलक्षणमिति निर्णयः ... ८०४

४. आसृत्युपक्रमाधिकरणम् ... ८०५—८०६

अपरब्रह्मविद्यावतस्तद्रहितस्य च समानैवैषा उत्क्रान्तिः, आ कार्यब्रह्मलोकप्राप्तेर्विद्योपक्रमात्, अविशेषश्रवणाच्च इति निष्कर्षः ... ८०५

५. संसारव्यपदेशाधिकरणम् ... ८०७—८०८

मिथ्याज्ञाननिमित्तश्च बन्धो न सम्यग्ज्ञानादृते विस्रंसितुमर्हतीति परस्यां देवतायामियं संपत्तिः बीजभावावशेषैव—इति निर्णयः ... ८०७

नाडीनिष्क्रमणश्रवणादिना सूक्ष्मशरीरमेव प्रवसतो जीवस्य आश्रयभूतमिति निर्णयः ... ८०८

६. प्रतिषेधाधिकरणम् ... ८०८—८१२

आत्यन्तिकेऽप्यमृतत्वे 'न तस्मात् प्राणाः' इति शाखान्तरीयश्रुतिमवलम्ब्य अस्त्युत्क्रान्तिरिति पूर्वपक्षः ८०९

प्राप्तिपूर्वः प्रतिषेधो भवति ; अविदुषो हि देहादुत्क्रमण दृष्टमिति तत्सामान्याद्विदुषोऽपि प्राप्ते उत्क्रमणे प्रतिषेध उपपद्यते— इत्यतो नास्त्युत्क्रान्तिरात्यन्तिकामृतत्वे इति सिद्धान्तः ... ८१०

७. वागादिलयाधिकरणम् ... ८१२

परब्रह्मविदः परस्मिन्नेवात्मनि प्राणादीनां प्रविलय इति प्रतिपादनम् ... ८१२

८. अविभागाधिकरणम् ... ८१२—८१३

अविद्यानिमित्तानां कलानां न विद्यानिमित्ते प्रलये सावशेषत्वोपपत्तिरिति उपदेशः ... ८१३

९. तदोकोऽधिकरणम् ... ८१३—८१४

विद्यासामर्थ्यात् मूर्धन्ययैव शताधिकया नाड्या वि-

द्वान् निष्क्रामति, इतराभिरितरे इति निर्णयः ... ८१३

१०. रश्म्यधिकरणम् .... ८१५—८१६

रात्रावहनि च म्रियमाणो विद्वानविशेषेण रश्म्यनुसारी सन् आदित्यमण्डलं प्राप्नोतीति सिद्धान्तप्रतिज्ञा ८१५

रात्रौ मृतस्य नाडीरश्मिसंबन्धाभावात् नास्ति रश्म्यनुसारित्वमिति शङ्कामुद्भाव्य, यावद्देहभावित्वान्नाडीरश्मिसंबन्धस्य अविशेषेण वर्ण्यमानरश्म्यनुसारसार्थक्याय च रात्रिंदिवं रश्म्यनुसारित्वमिति तन्निरासः ८१५

११. दक्षिणायनाधिकरणम् .... ८१६—८१८

अपाक्षिकफलत्वाद्विद्याया अनियतकालत्वान्मृत्योः दक्षिणायनेऽपि म्रियमाणो विद्वान् प्राप्नोत्येव विद्याफलम्— इत्युपपादनम् ... ८१७

'यत्र काले' इत्यादिस्मृत्या अहरादिकालविशेषनियमशङ्कायाः— श्रुतिस्मृत्योरातिवाहिककालप्राधान्यविषयभेदव्यवस्थया, प्रत्यभिज्ञाने च कालद्वारेण आतिवाहिक्य एव उक्ता इति उभयथाप्यविरोधः इति परिहारः ... ८१७

तृतीयः पादः— अर्चिरादिमार्गस्य गन्तव्यस्य च निर्णयः ... ८१९—८४३

१. अर्चिराद्यधिकरणम् ... ८२१—८२३

नानाशाखास्वनेकधा श्रूयमाणा अर्चिरादिकाः सृतयः

भिन्नप्रकरणस्थत्वात् भिन्नोपासनायोगाच्च मिथः
अनपेक्षा इति पूर्वपक्षः .... ८२१
सर्वत्र गत्येकदेशप्रत्यभिज्ञानात् गन्तव्याभेदाच्च इतरेत-
रविशेषणविशेष्यभावोपपत्तेः एकैव अर्चिरादिका सृ-
तिः अनेकविशेषणा ब्रह्मलोकप्रपदनी—इति सिद्धान्तः ८२२

२. वाय्वधिकरणम् ... ८२३—८२५
'यदा वै पुरुषोऽस्माल्लोकात्प्रैति' इत्यादिश्रुत्या अ-
ब्दादित्ययोरन्तराले वायोर्निवेशः—इत्यादिना ग-
तिविशेषणानां संनिवेशविशेषस्य मुद्धृत्वा उपदेशः ८२४

३. तडिदधिकरणम् ... ८२५
विद्युद्वरुणयोः संबन्धविशेषसत्त्वात् विद्युत उपरिष्टात्
वरुणः संबध्यते, 'आगन्तूनाम्' इति न्यायेन
वरुणादधि इन्द्रप्रजापती-इत्युपदेशः ... ८२५

४. आतिवाहिकाधिकरणम् ... ४२६—४२९
अर्चिरादयः मार्गचिह्नरूपत्वात् चिह्नान्येव ; अथ-
वा लोकरूपत्वात् भोगभूमयः—इति पूर्वपक्षः ... ८२६
'तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति' इति
लिङ्गात् संपिण्डितकरणानां सूक्ष्मदेहवतां गतौ
स्वातन्त्र्याभावाच्च देवतात्मानः आतिवाहिका एव
अर्चिरादयः इति सिद्धान्तः ... ८२७
वरुणादयस्तु अप्रतिबन्धकरणादिना अनुग्राहका एव,
तत्प्रभृति अमानवपुरुषेणैव वहनात्—इति निर्णयः ८२८

५. कार्याधिकरणम् ... ८२९—८४१

'स एनान्ब्रह्म गमयति' इत्यत्र किं कार्यमपरं ब्रह्म गमयति, आहोस्वित् परमेव मुख्यं ब्रह्म—इति विचिकित्सायां अप्राप्तप्रापणी गतिः न नित्यप्राप्तं परं ब्रह्म गमयितुमीष्टे, अपि तु अप्राप्तपूर्वत्वात् कार्यमपरमेव— इति तत्त्वदर्शी बादरिर्ददर्श— इति अर्थक्रमानुसारेण सिद्धान्तः ... ८२९

परब्रह्मसामीप्यात् अपरब्रह्मणि ब्रह्मशब्दोपपत्तिः—इति कथनम् ... ८३०

कार्यब्रह्मलोकं गतस्य अनावृत्त्यादिश्रुत्यभिधानेभ्यः क्रममुक्तिः प्रत्येतव्या— इति प्रदर्शनम् ... ८३१

ब्रह्म-शब्दस्य परब्रह्मणि मुख्यत्वात्, अमृतत्वफलदर्शनात्, परप्रकरण एव प्रजापतिसद्मप्रतिपत्त्यादिश्रवणाच्च परब्रह्मविषया गतिश्रुतयः— इति जैमिन्यभिमतः पूर्वपक्षः ... ८३१

पूर्वत्वात् पूर्वाणि पूर्वपक्षसूत्राणि—इति केचिन्मतसिद्धान्तानुवादः ... ८३३

'निष्कलं निष्क्रियम्' इत्यादिना प्रतिषिद्धसर्वविशेषस्य ब्रह्मणः गन्तव्यत्वानुपपत्तिप्रदर्शनम् ... ८३४

जगदुत्पत्त्यादिहेतुत्वश्रुत्या ब्रह्मणः अनेकशक्तित्वम्—इति शङ्कायाः सफलानन्यपरविशेषनिराकरणश्रुत्यनुरोधेन अफलान्यपरोत्पत्त्यादिश्रुतेः तच्छेषत्वात् न तद-

नुरोधेनानेकशक्तियोगो ब्रह्मणः—इति समाधानम् ... ८३४
गतेर्विचारासहत्वादपि अनुपपत्तिप्रदर्शनम् ... ८३६
अयत्नसिद्धो मोक्ष इति कर्मिणां मतमुपन्यस्य तस्य शास्त्रप्रमाणकत्वाभावात् स्वमनीषाकल्पितत्वात् उपपत्तिरहितत्वाच्च अनुपादेयत्वोपपादनम् ... ८३७
सर्वव्यवहाराणां प्राक्प्रबोधात् उपपत्त्युपन्यासः ... ८३९
गतिश्रुतीनां सगुणविद्याविषयत्वप्रपञ्चनम् ... ८४०
स्वमतोपन्यासोपसंहारः ... ८४१

६. अप्रतीकालम्बनाधिकरणम् ... ८४२—८४३
विकारालम्बनेषु मध्ये प्रतीकालम्बनान्वर्जयित्वा सर्वानपि अमानवः पुरुषः ब्रह्म गमयति—इति निर्णयः ८४२
फलविशेषदर्शनाच्च न प्रतीकालम्बनानाम् इतरैस्तुल्यफलत्वम्—इति निरूपणम् ... ८४३

चतुर्थः पादः— ज्ञानोपासनयोः फलनिर्णयः ... ८४५—८६२

१. संपद्याविर्भावाधिकरणम् ... ८४७—८४९
'एवमेवैषः...स्वेन रूपेणाभिनिष्पद्यते' इत्यत्र स्वेन इति विशेषणस्यावैयर्थ्याय केवलेनैवात्मरूपेण अभिनिष्पद्यते— इति निर्णयः ... ८४७
जाग्रदाद्यवस्थात्रये तुरीयावस्थायां च बद्धत्वमुक्तत्वकृतविशेषप्रतिपादनम् ... ८४८

'परं ज्योतिरुपसंपद्य' इत्यत्र ज्योतिःशब्दस्य भौतिकपरत्वमाशङ्क्य, प्रकरणात् तस्य आत्मपरत्वव्यवस्थापनम् ... ८४९

२. अविभागाधिकरणम् .. ८५०

स्वेन रूपेणाभिनिष्पद्यते यः, स परेणात्मना अविभक्त एवावतिष्ठते, 'तत्त्वमसि' इत्यादिवाक्यैः तथा दृष्टत्वात्– इति समर्थनम् ... ८५०

३. ब्राह्माधिकरणम् ... ८५१—८५२

'स्वेन रूपेण' इत्यत्र अपहतपाप्मत्वादिना स्वेन ब्राह्मेण रूपेण अभिनिष्पद्यते, 'य आत्मा' इत्याद्युपन्यासादिभ्यः—इति जैमिन्याचार्यमतोपन्यासः ८५१

निरस्ताशेषप्रपञ्चेन अव्यपदेश्येन चैतन्यमात्रात्मना अभिनिष्पद्यमानस्य मुक्तात्मनः अर्थशून्यैरेव अपहतपाप्मादिशब्दैः व्यपदेशः–इति औडुलोम्याचार्यमतोपन्यासः .... ८५१

सत्यकामत्वादीनाम् औपाधिकत्वेऽपि तच्छ्रुतीनां व्यावहारिकं प्रामाण्यमपेक्षणीयमिति बादरायणाचार्याभिप्रेतः सिद्धान्तः ... ८५२

४. संकल्पाधिकरणम् ... ८५३—८५४

'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादौ एवकारश्रवणात्, प्राकृतसंकल्पविलक्षणत्वाच्च मुक्तसं-

कल्पस्य, संकल्पादेव केवलात् पित्रादिसमुत्थानम्—
इति निर्णयः ... ८५३

५. अभावाधिकरणम् ... ८५४—८५६

'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यत्र विदुषः संकल्पसाधनमनसः सत्त्वेऽपि किं शरीरेन्द्रियाणि सन्ति, न वा सन्तीति समीक्षायाम् एवकारेण मनसा इति विशेषणाच्च देहेन्द्रियाणां अभावो विदुषः —इति बादरिमतप्रदर्शनम् ... ८५४

'स एकधा भवति' इत्यादिना अनेकविधता न विना शरीरभेदेन आञ्जसी—इति सेन्द्रियस्य शारीरस्य सद्भावो जैमिन्यभिमत इति प्रदर्शनम् ... ८५५

बादरायणस्त्वाचार्यः उभयलिङ्गश्रुतिदर्शनात् उभयविधत्वं साधु मन्यते—इति सिद्धान्तः ... ८५५

६. प्रदीपाधिकरणम् ... ८५६—८५७

विदुषः सशरीरत्वपक्षे त्रिधाभावादिषु अनेकशरीरसर्गे किं निरात्मकानि शरीराणि सृज्यन्ते, किं वा सात्मकानि इति विशये 'त्रिधा भवति पञ्चधा भवति' इत्यादिश्रुत्या एकोऽपि सन् विद्वान् ऐश्वर्ययोगात् प्रदीपवदनेकभावमापद्य सर्वशरीराण्याविशतीति सात्मकानि सर्वशरीराणि इति निष्कर्षः ... ८५६

विशेषविज्ञानाभाववचनानि सुषुप्तमुक्तान्यतरावस्थामपे-

स्य, न तु सगुणविद्याविपाकस्थानमवस्थान्तरम्—
इति प्रदर्शनम् ... ८५७

७. जगद्व्यापाराधिकरणम् ... ८५८—८६२

तत्रभवन्तं परमेश्वरं प्रकृत्यैव जगत्स्रष्टृत्वादिश्रुतीनां प्रवृत्तेः, समप्रधानानां नियमेनैकमत्यादर्शनाच्च जगद्व्यापारं विहाय अन्यदणिमाद्यैश्वर्यं परमेश्वरायत्तं सगुणोपासकानाम् ईश्वरसायुज्यं व्रजतां विदुषाम्—
इति निर्णयः ... ८५८

'तावानस्य महिमा' इत्यादिश्रुत्या द्विरूपे परमेश्वरे निर्गुणं रूपमनवाप्य यथा सगुण एवावतिष्ठन्ते विद्वांसः, एवं सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एव अवतिष्ठन्ते— इति प्रतिपादनम् ... ८६०

एवं सति सातिशयैश्वर्यस्यान्तवत्त्वात् सत्संपन्नानाम् आवृत्तिप्रसक्तिरिति शङ्कायाम्— ये नाडीरश्मिसंबन्धपूर्वकमर्चिरादिपर्वणा देवयानेन पथा ब्रह्मलोकं गच्छन्ति, तेषां 'न च पुनरावर्तते' इत्यादिश्रुतिभ्यः न पुनरावृत्तिः— इति समाधानम् ... ८६१

सम्यग्दर्शनविध्वस्ततमसां तु सिद्धैव अनावृत्तिरिति प्रतिपादनम् ८६२

## द्वितीयः पादः ॥

अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसारगतिप्रभेदः प्रपञ्चितः; इदानीं तस्यैवावस्थाभेदः प्रपञ्च्यते। इदमामनन्ति— 'स यत्र प्रस्वपिति' इत्युपक्रम्य 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते' इत्यादि। तत्र संशयः— किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिः, आहोस्विन्मायामयीति। तत्र तावत्प्रतिपद्यते—

### संध्ये सृष्टिराह हि ॥ १ ॥

१. संध्याधिकरणम्।

संध्ये सृष्टिरिति; संध्यमिति स्वप्नस्थानमाचष्टे, वेदे प्रयोगदर्शनात्— 'संध्यं तृतीयꣳ स्वप्नस्थानम्' इति; द्वयोर्लोकस्थानयोः प्रबोधसंप्रसादस्थानयोर्वा संधौ भवतीति संध्यम्; तस्मिन्संध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हति; कुतः? यतः प्रमाणभूता श्रुतिरेवमाह— 'अथ रथान्रथयोगान्पथः सृजते'

इत्यादि; 'स हि कर्ता' इति च उपसंहारात् एवमेवावगम्यते ॥

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

अपि च एके शाखिनः अस्मिन्नेव संध्ये स्थाने कामानां निर्मातारमात्मानमामनन्ति—'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति; पुत्रादयश्च तत्र कामा अभिप्रेयन्ते—काम्यन्त इति। ननु कामशब्देनेच्छाविशेषा एवोच्येरन्; न, 'शतायुषः पुत्रपौत्रान्वृणीष्व' इति प्रकृत्य अन्ते 'कामानां त्वा कामभाजं करोमि' इति प्रकृतेषु तत्र तत्र पुत्रादिषु कामशब्दस्य प्रयुक्तत्वात्। प्राज्ञं चैनं निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः—प्राज्ञस्य हीदं प्रकरणम्—'अन्यत्र धर्मादन्यत्राधर्मात्' इत्यादि; तद्विषय एव च वाक्यशेषोऽपि—'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' इति। प्राज्ञकर्तृका च सृष्टिस्तथ्यरूपा समधिगता जागरिताश्रया, तथा स्वप्नाश्रयापि सृष्टिर्भवितुमर्हति; तथा च श्रुतिः—'अथो खल्वाहुर्जागरितदेश एवास्यैष इति यान्येव जाग्रत्पश्यति तानि सुप्तः' इति स्वप्नजागरितयोः समानन्यायतां श्रावयति। तस्मात्तथ्यरूपैव संध्ये सृष्टिरिति ॥

एवं प्राप्ते, प्रत्याह—

## मायामात्रं तु कात्स्न्र्येनानभिव्यक्त-स्वरूपत्वात् ॥ ३ ॥

तु-शब्दः पक्षं व्यावर्तयति । नैतदस्ति—यदुक्तम्, संध्ये सृष्टिः पारमार्थिकीति ; मायैव संध्ये सृष्टिः, न परमार्थगन्धोऽप्यस्ति ; कुतः? कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्—न हि कात्स्न्र्येन परमार्थवस्तुधर्मेण अभिव्यक्तस्वरूपः स्वप्नः ; किं पुनरत्र कात्स्न्र्यमभिप्रेतम्? देशकालनिमित्तसंपत्तिः अबाधश्च । न हि परमार्थवस्तुविषयाणि देशकालनिमित्तानि अबाधश्च स्वप्ने संभाव्यन्ते—

न तावत्स्वप्ने रथादीनामुचितो देशः संभवति ; न हि संवृते देहदेशे रथादयोऽवकाशं लभेरन् ; स्यादेतत्— बहिर्देहात् स्वप्नं द्रक्ष्यति, देशान्तरितद्रव्यग्रहणात् ; दर्शयति च श्रुतिः बहिर्देहात्स्वप्नम्—'बहिष्कुलायादमृतश्चरित्वा । स ईयतेऽमृतो यत्र कामम्' इति ; स्थितिगतिप्रत्ययभेदश्च न अनिष्क्रान्ते जन्तौ सामञ्जस्यमश्नुवीत—इति । नेत्युच्यते—न हि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुं च ततः सामर्थ्यं संभाव्यते ; क्वचिच्च प्रत्या-

गमनवर्जितं स्वप्नं श्रावयति— कुरुष्वहमद्य शयानो निद्रयाभिप्लुतः, स्वप्ने पञ्चालानभिगतश्च अस्मिन्प्रतिबुद्धश्च— इति; देहाच्चेदपेयात्, पञ्चालेष्वेव प्रतिबुध्येत; तानसावभिगत इति; कुरुष्वेव तु प्रतिबुध्यते; येन च अयं देहेन देशान्तरमश्नुवानो मन्यते, तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति; यथाभूतानि च अयं देशान्तराणि स्वप्ने पश्यति, न तानि तथाभूतान्येव भवन्ति; परिधावंश्चेत्पश्येत्, जाग्रद्वत् वस्तुभूतमर्थमाकलयेत् । दर्शयति च श्रुतिरन्तरेव देहे स्वप्नम्— 'स यत्रैतत्स्वप्न्यया चरति' इत्युपक्रम्य 'स्वे शरीरे यथाकामं परिवर्तते' इति । अतश्च श्रुत्युपपत्तिविरोधाद्बहिष्कुलायश्रुतिः गौणी व्याख्यातव्या—बहिरिव कुलायात् अमृतश्चरित्वेति—यो हि वसन्नपि शरीरे न तेन प्रयोजनं करोति, स बहिरिव शरीराद्भवति—इति । स्थितिगतिप्रत्ययभेदोऽप्येवं सति विप्रलम्भ एवाभ्युपगन्तव्यः ॥

कालविसंवादोऽपि च स्वप्ने भवति— रजन्यां सुप्तो वासरं भारते वर्षे मन्यते; तथा मुहूर्तमात्रवर्तिनि स्वप्ने कदाचित् बहून् वर्षपूगान् अतिवाहयति । निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वा उचितानि विद्यन्ते; करणोपसंहाराद्धि नास्य अश्वरथादिग्रहणाय चक्षुरादीनि सन्ति;

रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा । बाध्यन्ते चैते रथाश्वादयः स्वप्नदृष्टाः प्रबोधे ; स्वप्न एव च एते सुलभबाधा भवन्ति, आद्यन्तयोर्व्यभिचारदर्शनात्— रथोऽयमिति हि कदाचित्स्वप्ने निर्धारितः क्षणेन मनुष्यः संपद्यते, मनुष्योऽयमिति निर्धारितः क्षणेन वृक्षः । स्पष्टं चाभावं रथादीनां स्वप्ने श्रावयति शास्त्रम्— 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' इत्यादि । तस्मान्मायामात्रं स्वप्नदर्शनम् ॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

मायामात्रत्वात्तर्हि न कश्चित्स्वप्ने परमार्थगन्धोऽस्तीति— नेत्युच्यते— सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः ; तथा हि श्रूयते– 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने' इति ; तथा 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यत इति श्रावयति ; आचक्षते च स्वप्नाध्यायविदः– 'कुञ्जरारोहणादीनि स्वप्ने धन्यानि, खरयानादीन्यधन्यानि' इति ; मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित्स्वप्नाः सत्यार्थगन्धिनो भवन्तीति

मन्यन्ते। तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वम्; सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यम्, बाध्यमानत्वादित्यभिप्रायः। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम्॥

यदुक्तम्—'आह हि' इति तदेवं सति भाक्तं व्याख्यातव्यम्—यथा 'लाङ्गलं गवादीनुद्वहति' इति निमित्तमात्रत्वादेवमुच्यते, न तु प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति; एवं निमित्तमात्रत्वात्— सुप्तो रथादीन्सृजते, 'स हि कर्ता'— इति च उच्यते; न तु प्रत्यक्षमेव सुप्तो रथादीन्सृजति। निमित्तत्वं तु अस्य रथादिप्रतिभाननिमित्तमोदत्रासादिदर्शनात्तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वेनेति वक्तव्यम्। अपि च जागरिते विषयेन्द्रियसंयोगात् आदित्यादिज्योतिर्व्यतिकराच्च आत्मनः स्वयंज्योतिष्ट्वं दुर्विवेचनमिति तद्विवेचनाय स्वप्न उपन्यस्तः; तत्र यदि रथादिसृष्टिवचनं श्रुत्या नीयेत, ततः स्वयंज्योतिष्ट्वं न निर्णीतं स्यात्; तस्माद्रथाद्यभाववचनं श्रुत्या, रथादिसृष्टिवचनं तु भक्त्येति व्याख्येयम्। एतेन निर्माणश्रवणं व्याख्यातम्। यदप्युक्तम्— 'प्राज्ञमेनं निर्मातारमामनन्ति' इति, तदप्यसत्, श्रुत्यन्तरं 'स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' इति जीवव्यापारश्रवणात्; इहापि 'य एष सुप्तेषु जागर्ति' इति प्रसिद्धानुवादाज्जीव

एवायं कामानां निर्माता संकीर्त्यते; तस्य तु वाक्यशेषेण 'तदेव शुक्रं तद्ब्रह्म' इति जीवभावं व्यावर्त्य ब्रह्मभाव उपदिश्यते– 'तत्त्वमसि' इत्यादिवत्– इति न ब्रह्मप्रकरणं विरुध्यते। न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापारः प्रतिषिध्यते, तस्य सर्वेश्वरत्वात् सर्वास्वप्यवस्थास्वधिष्ठातृत्वोपपत्तेः; पारमार्थिकस्तु नायं संध्याश्रयः सर्गः वियदादिसर्गवत्– इत्येतावत्प्रतिपाद्यते; न च वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति; प्रतिपादितं हि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम्। प्राक् तु ब्रह्मात्मत्वदर्शनात् वियदादिप्रपञ्चो व्यवस्थितरूपो भवति; संध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यते—इत्यतो वैशेषिकमिदं संध्यस्य मायामात्रत्वमुदितम्॥

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ॥ ५॥

अथापि स्यात्—परस्यैव तावदात्मनोंऽशः जीवः–अग्नेरिव विस्फुलिङ्गः; तत्रैवं सति यथा अग्निविस्फुलिङ्गयोः समाने दहनप्रकाशनशक्ती भवतः, एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती; ततश्च जीवस्य ज्ञानैश्वर्यवशात् सांकल्पिकी स्व-

प्रे रथादिसृष्टिर्भविष्यतीति । अत्रोच्यते—सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवस्येश्वरविपरीतधर्मत्वम् । किं पुनर्जीवस्य ईश्वरसमानधर्मत्वं नास्त्येव? न नास्त्येव; विद्यमानमपि तत् तिरोहितम् अविद्यादिव्यवधानात् । तत्पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य—तिमिरतिरस्कृतेव दृक्शक्तिः औषधवीर्यात्—ईश्वरप्रसादात् संसिद्धस्य कस्यचिदेवाविर्भवति, न स्वभावत एव, सर्वेषां जन्तूनाम्; कुतः? ततो हि ईश्वराद्धेतोः, अस्य जीवस्य, बन्धमोक्षौ भवतः— ईश्वरस्वरूपापरिज्ञानात् बन्धः, तत्स्वरूपपरिज्ञानात्तु मोक्षः । तथा च श्रुतिः—'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः । तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः' इत्येवमाद्या ॥

## देहयोगाद्वा सोऽपि ॥ ६ ॥

कस्मात्पुनर्जीवः परमात्मांश एव सन् तिरस्कृतज्ञानैश्वर्यो भवति? युक्तं तु ज्ञानैश्वर्ययोरतिरस्कृतत्वम्, विस्फुलिङ्गस्येव दहनप्रकाशनयोः—इति । उच्यते—सत्यमेवैतत्; सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावः, देहयोगात् देहेन्द्रियमनोबुद्धिविषयवेदनादियोगात् भवति । अस्ति च अत्रोपमा—

यथा अग्नेर्दहनप्रकाशनसंपन्नस्याप्यरणिगतस्य दहनप्रकाशने तिरोहिते भवतः, यथा वा भस्मच्छन्नस्य— एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात् तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्यतिरोभावः। वा-शब्दो जीवस्य ईश्वरात् अन्यत्वशङ्काव्यावृत्त्यर्थः। नन्वन्य एव जीवः ईश्वरादस्तु, तिरस्कृतज्ञानैश्वर्यत्वात्; किं देहयोगकल्पनया? नेत्युच्यते —न हि अन्यत्वं जीवस्य ईश्वरादुपपद्यते— 'सेयं देवतैक्षत' इत्युपक्रम्य 'अनेन जीवेनात्मनानुप्रविश्य' इत्यात्मशब्देन जीवस्य परामर्शात्; 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति च जीवाय उपदिशति ईश्वरात्मत्वम्; अतः अनन्य एव ईश्वराज्जीवः सन् देहयोगात्तिरोहितज्ञानैश्वर्यो भवति। अतश्च न सांकल्पिकी जीवस्य स्वप्ने रथादिसृष्टिर्घटते; यदि च सांकल्पिकी स्वप्ने रथादिसृष्टिः स्यात्, नैवानिष्टं कश्चित्स्वप्नं पश्येत्, न हि कश्चिदनिष्टं संकल्पयते। यत्पुनरुक्तम्—जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं ख्यापयतीति, न तत्साम्यवचनं सत्यत्वाभिप्रायम्, स्वयंज्योतिष्ट्वविरोधात्, श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात्; जागरितप्रभववासनानिर्मितत्वात्तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत्। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम्॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

२. तदभावाधिकरणम् ।

स्वप्नावस्था परीक्षिता; सुषुप्तावस्थेदानीं परीक्ष्यते । तत्रैताः सुषुप्तविषयाः श्रुतयो भवन्ति; क्वचिच्छ्रूयते—'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति' इति; अन्यत्र तु नाडीरेवानुक्रम्य श्रूयते—'ताभिः प्रत्यवसृप्य पुरीतति शेते' इति; तथान्यत्र नाडीरेवानुक्रम्य—'तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इति; तथान्यत्र— 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति; तथान्यत्र— 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' इति; तथा— 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' इति च ॥

तत्र संशयः— किमेतानि नाड्यादीनि परस्परनिरपेक्षतया भिन्नानि सुषुप्तिस्थानानि, आहोस्वित्परस्परापेक्षतया एकं सुषुप्तिस्थानमिति । किं तावत्प्राप्तम्? भिन्नानीति; कुतः? एकार्थत्वात्— न हि एकार्थानां क्वचित्परस्परापेक्षत्वं दृश्यते व्रीहियवादीनाम्; नाड्यादीनां च एकार्थता सुषुप्तौ दृश्यते, 'नाडीषु सृप्तो भवति' 'पुरीतति शेते' इति च तत्र तत्र

